**विद्यापक्षेऽपि प्रतिजीवमावरणभेदोपगमेन व्यवस्थोपपादनीया। तदेवं ब्रह्मज्ञानान्मोक्षः। स चानर्थनिवृत्तिर्निरतिशयब्रह्मानन्दावाप्तिश्चेति सिद्धं प्रयोजनम्।**

## इति वेदान्तपरिभाषायां प्रयोजनपरिच्छेदः।

एवमेकजीववादेनानेकजीववादेन चैकमुक्तौ सर्वमुक्त्ययोग इति निरूपितेऽपि अनेकजीववादेन तत्परिहारानुसन्धानमेव सर्वादरपात्रं भवितुमर्हति; दृष्टिसृष्टिवादाधिकारिणस्तु विरलविरला इति सूचयन्ननेकजीववादमात्रानुसन्धानेनोक्तशङ्कापरिहारसंपादितं प्रयोजनपरिच्छेदमुपसंहरिष्यन्ननुवदति—**तस्मादिति।** प्रकृतं प्रयोजनस्वरूपं निष्कृष्य प्रदर्शयन् "मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानी"ति महाभाष्यानुसारेण मङ्गलानां मङ्गलं प्रयोजनमेव स्वशब्दतो मङ्गलार्थं निर्दिशति—**प्रयोजनमिति।**

**तदयं संग्रहः:**—एकजीववादेन निर्विशेषब्रह्मभावः, अनेकजीववादेनेश्वरभावो वा मुक्तिः। तत्र प्रथममते एकमुक्तौ सर्वमुक्तिरिष्टैव, सर्वस्यापरस्य कल्पितत्वात्। द्वितीयमते त्वविद्याभेदात् तच्छक्तिभेदात् अन्तःकरणभेदाद्वा नेकमुक्तौ सर्वमुक्तिः। इयं च प्रारब्धकर्मणां सर्वेषां भोगेन नाशानन्तरं विदेहकैवल्यमिति, ततः पूर्वं तु तत्त्वसाक्षात्कारे जीवन्मुक्तिरिति च व्यपदिश्यते। एतदर्थं च जीवस्य नोत्क्रमणापेक्षा, सगुणोपासनमपि ब्रह्मलोकद्वारा निर्विशेषसाक्षात्कारहेतुरेव। सगुणोपासनफलं तूत्क्रमणापेक्षम्। इह जन्मनि तु नित्यानित्यवस्तुविवेकादिषु सत्स्वेव निर्विशेषसाक्षात्कारः। तत्र श्रवणमङ्गीति विवरणमतम्, निदिध्यासनमङ्गीति वाचस्पतिमिश्रमतम्। सर्वाणि श्रवणमनननिदिध्यासनानि साक्षात्कारहेतुरिति मतद्वयसम्मतमिदम्। श्रवणोपयोगिविविदिषोपयोगः पापक्षयद्वारा नित्यकर्मणाम्, नतु साक्षात् साक्षात्कारोपयोगो मोक्षोपयोगो वा। साक्षात्कारोऽयं भामतीकारमते मानस एव, विवरणमते तु शाब्दः। स चानन्दाकारवृत्तित्वादखण्डाकारवृत्तिपदेन व्यपदिश्यते। यदज्ञानेन यत्र दुःखं तत्र तज्ज्ञानेन तत्प्राप्तिरेव फलमिति आनन्दावाप्तिरेव मोक्षः। स च निरतिशयप्रयोजनरूपः। स्वर्गादिकं तु सातिशयं प्रयोजनम्;

पुरुषतन्त्रक्रियासाध्यत्वात्। एवं ब्रह्मज्ञानं निरूपितम्। ब्रह्म तु प्रतिपाद्यं साक्षात्कर्तव्यं प्राप्यं चैकजीववादे निर्विशेषम्, अनेकजीववादे तु श्रीभाष्यमत इव प्राप्यं परं सविशेषेश्वरस्वरूपमेव। इयान् विशेषः—यत् श्रीभाष्यमते—जीवस्य मुक्त्यवस्थायामपि शरीरतया स्वरूपतोऽवस्थितिर्जगद्व्यापारवर्जं तत्सारूप्यादिकमिति पदार्थत्रयसत्यता, अद्वैतमते तु जीवस्येश्वरभाव एवेति न पृथक्स्वरूपमिति पदार्थद्वयसत्यता। अत एव जगत्कारणत्वस्य तटस्थलक्षणतया निर्देशः, सर्वमुक्तौ निर्विशेषब्रह्मभावेऽपि स सम्भवीति सत्यं ज्ञानमित्यादिस्वरूपलक्षणनिर्देशश्चोपपद्यत इति वादद्वयेऽपि ज्ञेयस्य ब्रह्मणो निर्विशेषत्वं समानमेव, प्राप्यस्वरूप एव परं पक्षभेद इति फलितम्। निर्विशेषत्वं चाविद्याद्युपाधिधर्मापरवशत्वमविद्योपहित ब्रह्मण्युपहितशुद्धादिसाधारणमेव। उपहितमेव वेदान्तगम्यं नतु शुद्धमिति भामतीसिद्धान्तोऽप्यनेकजीववादप्रतिकर्मव्यवस्थाद्यभिप्राय एव, नैकजीववादाद्यभिप्रायः। तत्र हि मुख्यजीवसाक्षात्कारानन्तरं मूलाज्ञानविनाशात् न शुद्धस्वरूपविघात इत्यादिकमन्यत्र व्यक्तम्।

अत्राद्वैतमतसाधकतया आकरसम्मतानि वेदान्तवाक्यादीनीमान्येव—(१) "सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्" (२) अथ परा यया तदक्षरमधिगम्यते तत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः" (५) यस्यामतं तस्य मतं मतं यस्य न वेद सः। अविज्ञातं विजानतां विज्ञातमविजानताम्" (६) "न दृष्टेर्द्रष्टारं पश्येर्न मतेर्मन्तारं मन्वीथाः" (७) "आनन्दो ब्रह्म" (८) "इदं सर्वं यदयमात्मा" (९) "नेह नानास्ति किंचन। मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति" (१०) "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति। यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्? केन कं विजानीयात्" (११) "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" (१२) "यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति" (१३) "न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि" (१४) मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्" इत्यादीनि।

यत्तु-श्रीभाष्ये—एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानमुखेन—सच्छब्दवाच्यस्य परस्य ब्रह्मणो जगदुपादानत्वं जगन्निमित्तत्वं सर्वज्ञता सर्वशक्तियोगः सत्य-

धर्मभूतज्ञानसंकोचविकासोत्पत्त्यादिकमेव ज्ञानोत्पत्त्यादिकमेवमद्वैतमतेऽपि वृत्तिगुणजन्यताद्यभिप्रायमेव ज्ञानानित्यताव्यवहरणमपीति ज्ञानाश्रयत्वमात्मनः ब्रह्मणो वाऽन्तःकरणवृत्त्याद्युपाधिसम्बन्धाधीनमेव, न स्वतः। अत एव—आनन्दो ब्रह्मेति श्रुत्या आनन्दादिविशिष्टत्वं यदभिमन्यते, तदिदं—"प्रज्ञानमानन्दं ब्रह्मे"ति वाक्ये प्रज्ञानपदवैयर्थ्यात् न स्वरसम्। अत एव—"न दृष्टेर्द्रष्टारं पश्ये"रिति दृष्ट्यतिरिक्तद्रष्टृनिषेध उपपद्यते। श्रीभाष्यमते हि—यत्रागन्तुकचैतन्ययोगनिषेध उक्तवाक्यार्थः, तत्र लक्षणाध्याहारक्लेशस्सर्वविदित एव। तथाच ब्रह्मेतरसर्वपदार्थमित्थ्यात्वे एव वेदान्तानां तात्पर्यम्। अत एव हि—"नेह नानास्ति किंचने"ति भेदनिषेध उपपद्यते। शरीरशरीरित्वेतु तत्र भेदव्यपदेशोऽप्रसक्त एव। कल्पिताधिष्ठानयोस्तु अधिष्ठान आरोप्यभेदस्य प्रतीत्या स प्रसक्त इति तन्निषेधस्सुतरां सार्थक इत्यद्वैतमत एव भेदनिन्दाश्रुतीनां सार्थक्यम्। अत एव—"यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते" इति वाक्यम्—व्याख्यातम्; अस्यापि ब्रह्मणि एतस्मिञ्छब्दपरामृष्टे भेदनिन्दापरत्वात्। श्रीभाष्यमतरीत्या पूर्ववाक्यप्रस्तुतप्रतिष्ठाविच्छेदनिन्दापरत्वे तु "यदाह्येवैषेति वाक्ये एतस्मिन्निति स्थाने एतस्यामिति स्त्रीलिङ्गनिर्देशस्समापद्येत। अत एव—मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्" इति स्वाप्नप्रपञ्चस्य मायामयत्वं प्रतिपादितमुपपद्यते। अधिकं चात्र वक्तव्यं भूमिकायां व्यक्तम्। एतेन—न स्थानतोऽपीति सूत्रमपि—व्याख्यातम्। तदपि हि भूमिकायां सम्यगेव समालोचितम्। अपराण्यपि—दूषणानि श्रीभाष्यकारैरद्वैतसिद्धान्ते संपादितानि भूमिकायां सम्यगेव समालोचितानीति प्रत्यग्ब्रह्मैक्यमेव शास्त्रार्थः। तदुपपादनार्थमेव सर्वेषां वेदान्तानां प्रवृत्तिः। तत्र निर्गुणवाक्यानां साक्षात् सगुणकर्मवाक्यानां तु परम्परयोपयोगः। तादृशं च ब्रह्म प्रपञ्चाभावोपलक्षितमेवौपनिषदमिति प्रपञ्चाभावज्ञानजननार्थमनुपलब्धिपरिच्छेदस्यार्थापत्तिपरिच्छेदस्यानुमानपरिच्छेदस्य चोपयोगः। आगमपरिच्छेदस्य तु साक्षात् ब्रह्मप्रतिपादनेनोपयोग इति ब्रह्मैव तत्प्रमाणान्यपि प्रत्यक्षानुमानोपमानार्थापत्त्यागमानुपलब्धिरूपाणि सम्यगत्र समालोचितानि। तथाच तत्र "प्रत्यक्षप्रमा तु चैतन्यमेवे"ति उपक्रमे चैतन्यरूपेणोपसंहारे अखण्डानन्दरूपेण च विविचितं ब्रह्मैकं वेदपि यावदखण्डानन्दात्मस्फुरणं चैतन्यरूपेण सद्रूपेण च ब्रह्मज्ञानदशायामेव प्रत्यक्षादिप्रमाणप्रवृत्तिः; अखण्डा-